"तदञ्जलिना"[१]। यद्यपि "अनुमार्ष्टु तन्वो यद्विलिष्टम्"—इतिलिङ्गात्[२] मुखोपस्पर्शनाङ्गता मन्त्रस्य प्रतिभाति, तथापि वाक्यात्प्रतिग्रहणाङ्गता। तथाहि "यद्विष्टं[३] तत्सन्दधाति"-इतिग्रहणार्थवाद एव परतो दृश्यते, अर्थवादान्तराभावात्; अथशब्देन[४] च मुखोपस्पर्शनस्य व्यवधानादर्थवादान्तर[५]दर्शनाच्च। लिङ्गञ्चाविरुद्धमेव; मुखवद्धस्तयोरपि शरीरैकदेशत्वात्। "यद्विष्ट मिति। यजमानस्य एव यज्ञो वर्त्तते; तत्रैव स्थितस्य 'यद्विष्टं तत्सन्दधाति'-इत्यभिप्रायः। कण्वानान्तु "तदञ्जलिना प्रतिगृह्णाति, तत्र जपति संवर्चसेति"[६]। गृह्णतः यज्ञवीर्य मत्र च जप्यमानः प्रतिग्रहणाय स्पर्शनेऽपि प्रकाशयिष्यति। कः पुनः प्रतिगृह्णाति? यजमानः; अध्वर्योर्निनयने व्यापृतत्वात्, अन्यः कोऽपीति चिह्ने आशीर्लिङ्गत्वान्मन्त्रस्य यजमान एव। तथाच यज्ञस्य "यद् विष्टं तत्सन्दधातीति (उपपत्त्या, अत उत्तरत्र[७] च "एतदु चैवैतत् कर्म कुरुते"-इतिमन्त्रवाक्यशेषैरेव च सर्व मेवातः परं याजमान मित्यवसीयते[८] ॥ ६ ॥

---

१— का० श्रौ० सू० ३. ८. ६। तन्मन्त्रस्तु वा० सं० २. २४. १।
२— वा० स० २. २४. १ द्रष्टव्यः।
३— 'यदूर्द्धं'—इति क, भ।
४— 'उपशब्देन'—इति ठ (उत्तरकाण्डिकारम्भे)।
५— 'व्यवधानार्थवादान्तर'—इति ठ।
६— संवर्चसेति मन्त्रस्तु वा० सं० २. २४. १।
७— ७ क० द्रष्टव्या।
८— उपपत्त्येत्यादिग्रन्थः ठ-पुस्तके नास्ति।

॥नयनायोद॰

"अथ मुखम्"[१]। "एतद् वैवैतत्कर्मात्मन् कुरुते"-इतिशेषाद् यजमान आत्मीय मेव मुख मद्भिरुपस्पृशत इति गम्यते। यस्मात् कारणात् मुखं स्पृशति, 'तद् इयम्' द्वे ते कारणे इत्यर्थः। तत्रैकं तावत्— 'अमृतेनैवैतदात्मानं संस्पृशते'-इति। कथ मद्भिः संस्पृश्यमाने अमृतेन संस्पृशते? तदाह— "अमृतं वा आपः"-इति। यत्ते देवाना मन्न ममृतम्, ता आपः; आप एव हि शुद्धतमा अमृत मित्यभिप्रायः। अमृतसंस्पर्शनं यजमानेन कर्त्तव्य मित्येकं कारणम्। अपर मपि— 'एतच्च कर्म आत्मनः कुरुते' यजमानः। कथम्? यज्ञो वा आपः; आपश्च संश्लेषणहेतुरित्यभिप्रायः॥ ७॥

"अथ विष्णुक्रमान्"[२]। ('विष्णोः यज्ञस्य') सम्प्रवेश मिव इत्वा 'देवान् प्रीत्वा', (देवेषु मध्ये) 'अपित्वी' भागी 'भूत्वा' च उपेति विष्णुक्रमैर्देवयाजीत्यर्थः। "अनुपसर्गाद्वा"-इति[३] क्रमेरात्मनेपदम् ॥ ८॥[४]

---

१— का० श्रौ० सू० २. ८. १०। "एतच्चार्थकर्म, ततश्चान्तापच्छिन्नादौ न भवति"-इति च तद्वृत्तौ याज्ञिकदेवः।

२— का० श्रौ० सू० ३. ८. ११। मन्त्रास्तु वा० सं० २. २५. १, २, ३।

पा० सू० १. ३. ४३।

४— इहाप्यन्यथा भाष्यं ठ-पुस्तके। तद्यथा—

"अथ विष्णुक्रमान्। विष्णोर्यज्ञस्य क्रमणं विष्णुक्रमस्तं विष्णुप्रवेश मेव [illegible] कुरुते। देवान् वा। देवानेतान् एष यजमानः प्रीतान् करोति, य[illegible] संस्थापयति। त्वच्छब्दः समुच्चये। ऋगादिभिर्देवान् प्री[illegible]वेषु मध्ये भागवान् भवति। भागित्वं प्राप्य तान् म[illegible]नेव सर्वतोभावेन [illegible]क्रामति ॥ ८ ॥"-इति।

"यद्देव विष्णुक्रमान्"। यजमानशरीरस्थ एव 'यज्ञो विष्णुः' यजमानार्थं 'विक्रमते'।[1] 'तद्वै' तत्र 'इत एव' लोकात् 'पराचीनम्' ऊर्द्धम्, अन्तरिक्षं दिव मित्येवं 'भूयिष्ठा इव' बहुतमा इव 'क्रमन्ते' ॥ ९ ॥

विष्णुक्रमणे मन्त्राः[2]— "तदु तत् पृथिव्याम्"—इति। प्रथमा। "इत्येव मिमांल्लोकान्"-इति उत्तरपक्षस्यार्थवादः। गम्यत इति 'गतिः', प्रतितिष्ठन्त्यस्या मिति 'प्रतिष्ठा'। 'तस्य' आदित्यस्य 'ये रश्मयः' कदम्बकेसरवदनन्तभेदाः, 'ते सुकृतः' ये पूर्वे यजमानाः तेजःशरीराः। उपरित[न] मेव 'यद्' यज्ञरूपः 'प्रजापतिः', 'स्वर्गो वा लोकः' अज्ञानानां कर्मकर्तॄणां प्रजानां पतिः, ज्ञानिना मुपभोग्यं स्थानम्, 'तत्' तत्र; ते गच्छन्तीत्यभिप्रायः। 'भाः' प्रकाशमानं सूर्यरूपम्। (पक्षान्तरोपन्यासः।) "परस्तात् त्वेव"। 'तु'-शब्दः स्वशब्दार्थे, 'एव'-इत्यवधारणार्थः। 'इतः' अस्मादेव लोकात् 'अनुशासनम्' अस्मिन्नेव लोके फलोपभोगं बहुकाल माशास्ते, सः

१— ङ-पुस्तके त्वेतदुत्तर मेष ग्रन्थोऽधिकः—

"विष्णुरेव देवेभ्योऽर्थायेमां विष्णुक्रमलक्षणां विक्रान्तवान्। प्रथमपादेन पृथिवीक्रमलक्षणेन, पस्पार। "स्पृ प्रीतिचलनयोः" द्वितीयेन पादेनान्तरिक्षं विक्रान्तवान्। उत्तमेन दिवि क्रम॰... एतां विष्णुक्रमात्मिकां यज्ञो [illegible]मते। त[illegible] [illegible]क्रमान् क्रमते ॥"—इति।

नयनायोद॰

२— वा० सं० २. २५. ३, ?, १ इत्य[illegible]।